6 Sanskrit

# संस्कृत

छठी कक्षा के लिए

जम्मू एण्ड काश्मीर स्टेट बोर्ड ऑफ स्कूल एजूकेशन

# राष्ट्रीय-गानम्

जन-गण-मन-अधिनायक जय हे
भारत-भाग्य-विधाता
पंजाब-सिंधु-गुजरात-मराठा
द्राविड़-उत्कल-बंग
विंध्य-हिमाचल-यमुना-गंगा
उच्छल-जलधि-तरंग
तव शुभ नामे जागे, तव शुभ आशिष मागे
गाहे तव जय-गाथा
जन-गण-मंगल-दायक-जय हे, भारत-भाग्य-विधाता
जय हे जय हे जय हे
जय जय जय जय हे

# पाठ-सूची

# प्रथमः पाठः

देशः जयति । छात्रः पठति । बालः लिखति ।
मोहनः गच्छति । अहमदः चलति । साधुसिंहः धावति ।
प्रथमः पठति । द्वितीयः लिखति । तृतीयः क्रीडति ।
कः क्रीडति ? बालः क्रीडति । अहमदः च क्रीडति ।
कः लिखति ? छात्रः लिखति । बशीरः च लिखति ।
कः धावति ? अश्वः धावति । कुक्कुरः च धावति ।
कः वर्षति ? मेघः वर्षति । सूर्यः न वर्षति ।
कः पचति ? सूदः पचति । दासः न पचति ।
प्रथमः पिबति । द्वितीयः न पिबति । तृतीयः तु पिबति ।
कः गर्जति ? सिंहः गर्जति । मेघः च गर्जति ।
कः तपति ? सूर्यः तपति । अनलः च तपति ।
कः वदति ? नरः वदति । अश्वः न वदति ।
कः हसति ? रमेशः हसति । नसीरः च हसति ।
कः खादति ? जसमेरसिंहः खादति । जयरामः न खादति ।

## शब्दार्थः

जयति=जीतता है। धावति=दौड़ता है। कः=कौन अश्वः=घोड़ा। कुक्कुरः=कुत्ता। पचति=पकाता है। सूदः=रसोइया। अनल=आग।

## अभ्यासः

1. खाली स्थानों को भर दीजिए :—

(क) ...... गच्छति। (ख) ...... धावति।
(ग) साधुसिंहः ...... । (घ) मेघः ...... ।
(ङ) ...... पिबति ...... । (च) ...... गर्जति।

२. संस्कृतमें उत्तर दीजिए :—

(क) कः जयति? (ख) कः क्रीडति?
(ग) कः धावति? (घ) कः पचति?
(ङ) कः पिबति? (च) कः तपति?

३. शुद्ध करके लिखिए :—

(क) बालः लिखती। (ख) छात्रः पठति।
(ग) सूरजः तपति। (घ) चन्द्रः न तपति।
(ङ) बालः पीबति। (च) अश्वः धावति।

# द्वितीयः पाठः

बालः कुत्र गच्छति ? बालः तत्र गच्छति ।
छात्रः कुत्र क्रीडति ? छात्रः अत्र क्रीडति ।
रहीमः कुत्र पठति ? रहीमः अत्र पठति ।
वृक्षः कुत्र फलति ? यत्र मेघः वर्षति ।
देशः कुत्र जयति ? यत्र कृषकः कर्षति ।
यथा मेघः वर्षति, तदा वृक्षः फलति ।
वृक्षः कदा फलति ? यदा समयः आगच्छति ।
शमसुद्दीनः कदा पठति ? यदा अमरनाथः पठति ।
यथा सः पठति, तथा सः लिखति ।
बलदेवः कदा आगच्छति ? यदा सः इच्छति ।
रहमानः कथं पश्यति ? यथा मोतीलालः पश्यति ।
यथा देशः तथा वेशः ? यथा राजा तथा प्रजा ।
चमनलालः सदा पठति ? कर्मचन्दः सदा न पठति ।

## शब्दार्थः

कृषकः—किसान। कर्षति—हल चलाता है। वेषः—भेस।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) अत्र ...... क्रीडति। (ख) तत्र बालः ...... ।
(ग) अमरनाथः ...... हसति? (घ) ...... कदा आगच्छति?
(ङ) अधुना कः ...... ? (च) यथा देशः तथा ......।

२. संस्कृत में उत्तर दीजिए :—

(क) रहीमः कुत्र पठति? (ख) वृक्षः कदा फलति?
(ग) देशः कुत्र जयति? (घ) छात्रः कुत्र क्रीडति?

३. संस्कृत में अनुवाद कीजिए :—

(क) बशीर कहाँ पढ़ता है? (ख) मनोहर क्या देखता है
(ग) बलदेव कब आता है? (घ) मोहन यहाँ खेलता है।
(ङ) जब बादल बरसता है, तब मोर नाचता है।
(च) यहाँ वृक्ष नहीं फलता है।

# तृतीयः पाठः

के पठन्ति ? के न पठन्ति ? ते न पठन्ति । के बालाः क्रीडन्ति ? ते बालाः क्रीडन्ति ये न पठन्ति । के छात्राः न लिखन्ति ? ये न पठन्ति, ये च न स्मरन्ति ।

यदा मेघाः गर्जन्ति, तदा मयूराः नृत्यन्ति, तदा च बालाः हसन्ति । यत्र कृषकाः कर्षन्ति, यत्र मेघाः वर्षन्ति । तत्र लोकाः न क्रन्दन्ति । यदा ऋक्षाः नृत्यन्ति, तदा बालाः पश्यन्ति, ते च हसन्ति ।

यथा यथा मेघाः वर्षन्ति तथा तथा बालाः प्रसीदन्ति । के सदा न प्रसीदन्ति ? ये सदा न पठन्ति न च लिखन्ति । यथा अध्यापकाः वदन्ति, तथा छात्राः लिखन्ति ।

कदा वृक्षाः न फलन्ति ? यदा मालाकाराः न सिञ्चन्ति ।

अत्र के वसन्ति ? अत्र छात्राः वसन्ति । ते पठन्ति लिखन्ति च । यदा ग्रीष्मः आगच्छति, तदा घर्मः भवति । कुत्र नर्तकाः नृत्यन्ति ? अत्र नर्तकाः नृत्यन्ति गायन्ति च ।

## शब्दार्थः

क्रन्दन्ति=रोते हैं। ऋक्षाः=(बहुत) रीछ। प्रसीदन्ति=खुश होते हैं। यथा-यथा=जैसे-जैसे। तथा-तथा=वैसे-वैसे। मालाकाराः=(बहुत) माली। नर्तकाः=नाचने वाले। ग्रीष्मः=गर्मी।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) बालाः.........। (ख) छात्राः.........।
(ग) .......नृत्यन्ति। (घ) .........हसन्ति।
(ङ) कुत्र नर्तकाः.....? (च) अधुना...क्रीडन्ति।

२. बहुवचन में लिखिए :—

(क) नरः वदति। (ख) मयूरः नृत्यति।
(ग) बालः पश्यति। (घ) कुक्कुरः धावति।
(ङ) मेघः गर्जति। (च) छात्रः पठति।
(छ) सः सूदः पचति। (ज) कः पुरुषः हसति?

३. एकवचन में लिखिए :—

(क) मेघाः गर्जन्ति। (ख) अश्वा धावन्ति।
(ग) के नराः गच्छन्ति? (घ) ये बालाः हसन्ति।
(ङ) ऋक्षाः नृत्यन्ति। (च) छात्राः लिखन्ति पठन्ति च।

## चतुर्थः पाठः

श्यामा पठति। राधा पचति। सकीना पश्यति। सा कन्या नृत्यति। का कन्या गायति? उषा गायति।

या कन्या गायति, सा न नृत्यति। या नृत्यति, सा न गायति।

एका नृत्यति, द्वितीया गायति, तृतीया पश्यति। महमूदा क्रुध्यति। परम् सलमा न क्रुध्यति। या छात्रा पठति, सा छात्रा लिखति, सा एव क्रीडति।

सुता पृच्छति, माता न पृच्छति, माता स्मरति। हमीदा स्मरति, वहीदा अपि स्मरति, परं मीरा न स्मरति।

लता शुष्यति, माला अपि शुष्यति। गङ्गा न शुष्यति।

वेदना शाम्यति। पीडा शाम्यति। क्षुधा न शाम्यति। सा बाला तत्र गच्छति, सा अत्र न आगच्छति। का छात्रा पठति? का च न पठति? का च लिखति? क्षुधा तुदति। तृषा च तुदति। छाया न तुदति।

## शब्दार्थः

क्रुध्यति = क्रोध करती है। लता = बेल। वेदना = पीड़ा। क्षुधा = भूख। शाम्यति = शान्त होती है। तृषा = प्यास। तुदति = सताती है।

## अभ्यास

१. संस्कृत में उत्तर दीजिए :—

(क) का पठति ? (ख) का गायति ?
(ग) का नृत्यति ? (घ) का पृच्छति ?
(ङ) का क्रुध्यति ? (च) का पश्यति ?

२. खाली स्थानों को भर दीजिए :—

(क) सा···क्रीडति। (ख) ···च क्रीडति।
(ग) क्षुधा···। (घ) तृषा च···।
(ङ) या छाया न···।

३. संस्कृत में अनुवाद कीजिए :—

(क) बेटी देखती है। (ख) लड़की नाचती है।
(ग) सलमा क्रोध करती है। (घ) भूख सताती है।
(ङ) प्यास भी सताती है। (च) माता पूछती है।

## पञ्चमः पाठः

कन्याः क्रीडन्ति । छात्राः क्रीडन्ति । सुताः क्रीडन्ति । काः कन्याः नृत्यन्ति ? काः न नृत्यन्ति ? काः च न गायन्ति ?

लताः नमन्ति । छात्राः च नमन्ति । काः न नमन्ति ?

याः छात्राः नृत्यन्ति । ताः छात्राः प्रसीदन्ति च । काः शुष्यन्ति ? मालाः शुष्यन्ति ? काः च न शुष्यन्ति ? काः कन्याः अद्य गायन्ति ? काः अध्यापिकाः तत्र हसन्ति ?

याः छात्राः न पठन्ति, याः च न लिखन्ति, ताः एव छात्राः न प्रसीदन्ति ।

फलम् पतति । जलम् पतति । किम् न पतति ? किम् जयति ? ऋतम् जयति । अनृतम् न जयति । किम् वहति ? रुधिरम् वहति । जलम् च वहति । उपवनम् न शुष्यति । पुष्पम् कथम् शुष्यति ?

पुण्यम् जयति । पापम् न जयति । हृदयम् तु जयति । यत्र पापम् भवति, तत्र दुःखम् (भवति) । यत्र पुण्यम् भवति, तत्र सुखम् (भवति) ।

### शब्दार्थः

शुष्यन्ति=सूखते हैं। ऋतम्=सत्य। अनृतम्=झूठ। वहति=बहता है। उपवनम्=बाग। शुष्यति=सूखता है। असत्यम्=झूठ। यः बालः=जो लड़का। या बाला=जो लड़की। ऐसे ही, का (बाला) =कौन (लड़की)? सा (बाला)=वह (लड़की)।

### अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) किं शुष्यति (ख) किं न शुष्यति

(ग) यत्र पापं भवति तत्र किम् भवति? (घ) यत्र पुण्यं भवति तत्र किं भवति?

(ङ) काः छात्राः पठन्ति? (च) काः क्रीडन्ति?

२. बहुवचन में लिखिए :—

(क) कन्या क्रीडति। (ख) छात्रा पठति।

(ग) लता नमति। (घ) कन्या गायति।

(ङ) अध्यापिका वदति (च) लता शुष्यति

३. एकवचन में लिखिए :—

(क) सुताः क्रीड़न्ति। (ख) छात्राः लिखन्ति।

(ग) अध्यापिकाः आगच्छन्ति (घ) मालाः शुष्यन्ति।

(ङ) काः नृत्यन्ति (च) काः गायन्ति

# षष्ठः पाठः

अहम् पठामि। अहम् लिखामि। अहम् स्मरामि। अहम् किम् न पठामि ? अहम् किम् न लिखामि ? अहम् किम् न स्मरामि ? अहम् भ्रमामि। अहम् धावामि। अहम् चलामि।

अहम् अत्र भ्रमामि। अहं तत्र धावामि। अहं सर्वत्र धावामि। अहं न शोचामि। अहं न पश्यामि। अहं अत्र किं पश्यामि ? अहं वदामि। अहं किं वदामि ? किम् अहं न वदामि ?

वयं पठामः। वयं लिखामः। वयं स्मरामः। वयम् अत्र पठामः। वयं कुत्र क्रीडामः ? वयम् अत्र तिष्ठामः। वयं तत्र न तिष्ठामः। यत्र वयम् तिष्ठामः तत्र न खादामः। तत्र वयम् क्रीडामः।

अहं पश्यामि। वयं पश्यामः
अहं क्रीडामि। वयं क्रीडामः
अहं न पिबामि। वयं न पिबामः।

### शब्दार्थः

(अहम्) भ्रमामि=(मैं) घूमता हूं। वयम्=हम। पठामः= पढ़ते हैं। तिष्ठामः=(हम) ठहरते हैं।

### अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) ......चलामि।
(ख) ......पठामः।
(ग) अहम्...... ।
(घ) वयम्...... ।
(ङ) वयम् कुत्र... ।
(च) वयं तत्र... ।

२. बहुवचन में लिखिए :—

(क) अहं धावामि।
(ख) किम् अहम् अपि भ्रमामि ?
(ग) किम् अहं न पठामि ?
(घ) अहं सदा पश्यामि।
(ङ) अहं कुत्र न पश्यामि ?
(च) अधुना एवं अहं चलामि।

३. एकवचन में लिखिए :—

(क) वयं खादामः।
(ख) वयं सदा न भ्रमामः।
(ग) वयं पिबामः।
(घ) किं वयं न चलामः ?
(ङ) वयम् अत्र एव तिष्ठामः।

## सप्तमः पाठः

त्वम् वदसि । त्वम् पठसि । त्वम् लिखसि । त्वं चलसि । त्वं न स्मरसि । त्वं किं पृच्छसि ? त्वं हससि । किं त्वं हससि ? किं त्वं न हससि ? त्वं स्पृशसि । त्वं न स्पृशसि । त्वं किं न स्पृशसि ? यूयं खादथ । यूयं किं खादथ ? यूयं किं न खादथ ? यूयं कुत्र तिष्ठथ ? यूयं किम् अर्जथ ? यूयं किम् न अर्जथ ?

यूयं क्रुध्यथ । यूयं किमर्थं क्रुध्यथ यूयं किम् स्पृशथ ? यूयम् उपविशथ । यूयम् कुत्र उपविशथ ? यूयम् अत्र किम न तिष्ठथ ?

| | |
|---|---|
| त्वं क्षिपसि । | यूयम् किम् क्षिपथ ? |
| त्वं कुत्र गच्छसि ? | यूयम् कुत्र गच्छथ ? |
| त्वं पश्यसि ? | यूयम् किम पश्यथ ? |

## शब्दार्थः

(त्वम्) वदसि = तू बोलता है । स्पृशसि = (तू) छूता है । (यूयम्) तिष्ठथ = तुम ठहरते हो । अर्जथ = कमाते हो । उपविशथ = बैठते हो । क्षिपसि = (तू) फेंकता है ।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) त्वम् कि······ । (ख) यूयम् कुत्र······ ।

(ग) किं त्वम् अत्र··· ? (घ) किं यूयम् अत्र··· ?

२. बहुवचन में लिखिए :—

(क) त्वं खादसि । (ख) त्वं स्पृशसि ।

(ग) त्वं किमर्थं क्रन्दसि ? (घ) त्वं किम् अर्जसि ।

३ एकवचन में लिखिए :—

(क) यूयं किं खादथ ? (ख) यूयं किं वदथ ?

(ग) यूयं कुत्र तिष्ठथ ? (घ) यूयं किं पश्यथ ?

४. शुद्ध करके लिखिए :—

(क) त्वं गच्छति । (ख) यूयं चलसि ।

(ग) यूयं खादसि । (घ) त्वं किम् पश्यथ ।

(ङ) त्वं कुत्र चलति ।

## अष्टमः पाठ

कविः गायति। कविः कदा गायति? यदा सः इच्छति।

किं गिरिः पतति? न हि, गिरिः न पतति। अरिः पतति।

रविः कदा उदयति। यदा रश्मिः उदयति। यदा चन्द्रः न उदयति।

भानुः तपति। इन्दुः न तपति। रविः तपति। वायुः चलति। सिन्धु अपि चलति। गिरिः न चलति। शत्रुः कदा शाम्यति? यदा देशः जयति। साधुः सदा शाम्यति।

विधुः उदयति। भानु उदयति। साधु अपि उदयति।

कवयः अत्र न गायन्ति। अत्र तु कपयः क्रन्दन्ति। अलयः गुञ्जन्ति। शिशवः क्रन्दन्ति। साधवः गायन्ति।

यः अग्निः ज्वलति, सः अग्निः एव शाम्यति। सः एव वहति।

## शब्दार्थः

अरिः = रिपुः = शत्रुः । भानुः = रविः = सूर्यः । रश्मिः = किरण । इन्दुः = चन्द्रः । सिन्धुः = समुद्रः । कपयः = (बहुत) वानर । अलयः = भौंरे । ज्वलति = जलती है । दहति = जलाती है ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) के गुञ्जन्ति । (ख) के अत्र क्रन्दन्ति ?
(ग) कवयः कदा गायन्ति ?

२. बहुवचन में लिखिए :—

(क) अलिः गुञ्जति । (ख) साधुः कुत्र वसति ?
(ग) कः गिरिः पतति ? (घ) शिशुः क्रन्दति ।

३. एकवचन में लिखिए :—

(क) कपयः क्रुध्यन्ति । (ख) रिपवः न जयन्ति ।
(ग) अलयः भ्रमन्ति । (घ) अरयः पतन्ति ।
(ङ) गुरवः उपदिशन्ति । (च) गिरयः तिष्ठन्ति ।

४. शुद्ध करके लिखिए :—

(क) साधुवः गायन्ति । (ख) शिशुवः क्रन्दन्ति ।
(ग) कवियः किं वदन्ति ? (घ) कपी धावति ।

## नवमः पाठः

पुत्री पठति । जननी न पठति । भगिनी पठति । नारी पश्यति । सखी च पश्यति । पर कुमारी न पश्यति । मयूरो नृत्यति । नर्तकी अपि नृत्यति । सखी पश्यति एव ।

जननी स्निह्यति । मातामही अपि स्निह्यति । पितामही अपि स्निह्यति ।

बिडाली धावति । कुक्कुरी अपि धावति । परं कुक्कुटी न धावति ।

अधुना रजनी आगच्छति, परं निद्रा न आगच्छति । नदी कुत्र वहति ? नदी यत्र तत्र वहति । सा अन्यत्र न वहति ।

काः सख्यः वदन्ति ? याः क्रीडन्ति याः च हसन्ति ।

कुमार्यः कुत्र तिष्ठन्ति ? ताः अत्र न तिष्ठन्ति । अत्र पत्न्यः तिष्ठन्ति । स्वामिन्यः किम उपदिशन्ति ? ताः किम् अपि न उपदिशन्ति ।

यत्र सख्यः क्रीडन्ति तत्र एव किशोर्यः अपि क्रीडन्ति । ताः नार्यः हृष्यन्ति याः नार्यः पचन्ति । याः पश्यन्ति ताः एव वदन्ति । कुमार्यः कुत्र अटन्ति ?

## शब्दार्थः

मातामही=नानी । पितामही=दादी । विडाली=बिल्ली । कुक्कुरी=कुतिया । कुक्कुटी=मुर्गी । सख्यः=सखियां । उपदिशन्ति=उपदेश देती हैं । कुमार्यः=लड़कियां । दास्यः=नोकरानियां । किशोर्यः=छोटी लड़कियां । हृष्यन्ति=खुश होती हैं ।

## अभ्यासः

१. बहुवचन में लिखिए :—

(क) नारी न पचति । (ख) दासी अत्र न वसति ।
(ग) सखी अत्र न क्रीडति । (घ) किशोरी किं वदति ?
(ङ) भगिनी कुत्र तिष्ठति ? (च) नदी सदा वहति ।

२. एकवचन में लिखिए :—

(क) नद्यः वहन्ति । (ख) अत्र कुमार्यः भ्रमन्ति ।
(ग) तत्र किशोर्यः क्रीडन्ति (घ) मयूर्यः अत्र एव नृत्यन्ति ।
(ङ) जनन्यः सदा उपदिशन्ति (च) शुकः अत्र एव तिष्ठन्ति ।

३. शुद्ध करके लिखिए :—

(क) नद्यः कुत्र वहति ? (ख) सखी किं न क्रीडन्ति ।
(ग) भगिनी किं वदन्ति । (घ) विडाल्यः कुत्र भ्रमति ।
(ङ) का नारी पठन्ति ? (च) सख्यः किं पचति ?

## दशमः पाठः

छात्रः विद्यालयं गच्छति । वानरः फलं हरति । शिशुः शुकं पालयति । नरः भोजनं खादति । किंकरः जलं नयति । गोपः दुग्धं आनयति ।

कवि[illegible] पठति । रविः प्रकाशं यच्छति । प्रभुः कुत्र तिष्ठति ? कः गुरुः स्निह्यति ? यः शिष्यम् उपविशति ।

लता पुष्पं मुञ्चति । शान्ता पुस्तकं पठति । महमूदा रत्नं पश्यति । या दुग्धम् आनयति सा एव दुग्धं पिबति । या यत् आनयति सा तत् एव नयति ।

वीराः देशं रक्षन्ति । योधाः युद्धं गच्छन्ति । ये धनम् अर्जन्ति ते धनं न अर्चन्ति । के दुग्धं पिबन्ति ? के च न पिबन्ति ? कपयः तत् फलं न खादन्ति । कवयः पुस्तकं पठन्ति । शिशवः दुग्धं पिबन्ति ।

## शब्दार्थः

शुकं=तोते को । गोपः=ग्वाला । आनयति=लाता है। यच्छति=देता है । मुञ्चति=छोड़ती है । यत्=जो । तत्=वह। योधाः=वीर सैनिक । अर्चन्ति=पूजते है । शिशवः=बच्चे ।

## अभ्यासः

१ संस्कृत में उत्तर दीजिए :—

(क) कविः किं पठति ? (ख) रविः किं यच्छति ?
(ग) छात्रः कुत्र गच्छति ? (घ) के दुग्धं पिबन्ति ?
(ङ) कः गुरुः स्निह्यति ? (च) के देशं रक्षन्ति ?

२. संस्कृत में अनुवाद कीजिए ?

(क) बेल फूल छोड़ती है ? (ख) शत्रु धन नहीं छोड़ते है।
(ग) लड़का पुस्तक पढ़ता है । (घ) कवि श्लोक पढ़ते हैं ।
(ङ) नौकरानियाँ भोजन पकाती हैं । (च) बच्चे सूर्य को देखते हैं।

३. शुद्ध करके लिखिए :—

(क) सः कन्या पुस्तक पठति ।
(ख) त्वम दुग्धः पिबसि ।
(ग) छात्रः विध्यालयः गछति ।
(घ) वीराः देशः रक्षति ।
(ङ) शिशुवः फलः खादन्ति ।

# एकादशः पाठः

छात्रः पाठम् अपठत्। कन्या पाठम् अपठत्। कः पाठम् अपठत् ? यः पाठं न अलिखत् सः पाठम् न अस्मरत्।

का बाला गृहम् अगच्छत् ? या बाला अत्र न अतिष्ठत्।

कः कविः श्लोकम् अपठत् ? यः कविः अत्र आगच्छत्।

कः तरुः अधुना अपतत् ? यः तरुः अत्र अतिष्ठत्।

नराः नगरम् अगच्छन्। ते किमर्थं नगरम् अगच्छन् ?

ते घासम् आनयन्। लताः वृक्षम् अमुञ्चन्। शिशवः चन्द्रम् अपश्यन्।

ये जलम् अपिबन् ते एव दुग्धम् अपि अपिबन्। फलानि अपतन्। पुष्पाणि च अपतन्।

छात्रः पुस्तकानि अनयत्। वैद्यः औषधम् अयच्छत्। वृक्षाः पत्राणि अमुञ्चन्।

## शब्दार्थः

(सः) अपठत्=(उसने) पढ़ा । अलिखत्=(उसने) लिखा । अस्मरत्=(उसने) याद किया । गृहम्=घर (को) । अतिष्ठत्=ठहरा था । (ते) आनयन् (वे) लाए । अपचन्=(उन्होंने) पकाया । अखादन्=(उन्होंने) खाया ।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) छात्रः किम् अपठत् ? (ख) के घासम् आनयन् ?
(ग) का पाठम् अपठत् ? (घ) अलि कुत्र अगुञ्जत् ?
(ङ) नराः कुत्र अगच्छन् ? (च) के श्लोकान् अपठन् ?

२. बहुवचन में लिखिए :—

(क) कः नगरम् अगच्छत् ? (ख) वृक्षः पत्रम् अमुञ्चत् ।
(ग) कविः श्लोकम् अपठत् । (घ) छात्रः पुस्तकम् अनयत् ।

३. एकवचन में लिखिए :—

(क) सख्यः कन्दुकम् अक्रीडन् । (ख) बटवः अध्यापकम् अपृच्छन् ।
(ग) वृक्षाः पत्राणि अमुञ्चन् । (घ) छात्राः पुष्पाणि आनयन् ।
(ङ) नद्यः जलम् अवहन् । (च) शिशवः दुग्धम् अपिबन् ।

पठतु पठताम् पठन्तु
पठ पठतम् पठत
पठानि पठाव पठाम

## द्वादशः पाठः

(लोट् लकार)

अत्र आगच्छ । तत्र मा गच्छ । अधुना उत्तिष्ठ । इदं पुस्तकं पठ । कलम् आनय । दुग्धं नय । गृहं चल । गुरुं पृच्छ ।

फलानि खाद । मिष्टान्नं मा खाद । जलं पिब । दुग्धं मा पिब । तक्रं पिब ।

(त्वं) पुस्तकं पठ, पत्रं च लिख । (त्वं) शीघ्रं गृहं गच्छ । (त्वं) काष्ठानि आनय ।

हे बालाः अत्र मा क्रीडत । यूयं अधुना गृहं गच्छत । यूयं शुद्धं भोजनं खादत ।

यूयं कम् पाठम् स्मरत् ? यूयम् एकं पुस्तकम् आनयत । यूयं लेखनीम् अपि आनयत । अरेः छात्राः, शीघ्रम् शीघ्रम् पाठं स्मरत । सज्जनान् पश्यत ।

भोः सैनिकाः, यूयं दासीः मुञ्चत ।

यूयं शिशून् मा ताडयत । यूयम् अत्र एव भोजनं खादत ।

### शब्दार्थ:

(त्वम्) आगच्छ=(तू) आ। उत्तिष्ठ=(तू) उठ। इदम्=यह। (मा) पृच्छ=(मत) पूछ। (यूयम्) क्रीडत=(तुम) खेलो। खादत=खाओ। स्मरत=याद करो। आनयत=लाओ। इदानीम्=अब।

### अभ्यास:

१. बहुवचन में लिखिए :—

(क) इदं पुस्तकं पठ। (ख) (त्वं) दुग्धं मा पिब।

(ग) इदानीं पाठं लिख। (घ) त्वं शीघ्रम् अत्र आगच्छ।

(ङ) हे बालक, अत्र मा भ्रम।

(च) त्वं गृहं धाव।

२. एकवचन में लिखिए :—

(क) यूयं गच्छत। (ख) यूयं किं पृच्छत ?

(ग) यूयं पाठं पठत। (घ) यूयं कुत्र भोजनं खादत ?

(ङ) यूयं जलं मा पिबत। (च) यूयं फलानि आहरत।

३. संस्कृत में अनुवाद कीजिए :—

(क) उठ, घर को जा। (ख) हे बालक, शीघ्र यहाँ आ।

(ग) पाठ याद कर। (घ) (तुम) फूल लाओ।

(ङ) इस पुस्तक को पढ़ो। (च) जल्दी-जल्दी दूध पी।

(छ) तुम फल खाओ। (ज) तू पानी मत पी।

## त्रयोदशः पाठः

(भूतकालीन कृदन्त) Pg 130

बालेन हसितम् । किमर्थं तेन हसितम् ? एवम् एव तेन हसितम् ।

छात्रेण किं कृतम् ? छात्रेण किम् अपि अयुक्तं न कृतम् । तेन स्वकार्यम् एव कृतम् ।

चोरेण कुत्र धनं हृतम् ? तेन धनं स्वगृहम् हृतम् । केन किं दत्तम् ? साधुसिंहेन भोजनं दत्तम् । चौरेण वस्त्रं दत्तम् । परं मया भूषणं दत्तम् । त्वया तु किम् अपि न दत्तम् ।

केन सत्यम् उक्तम् ? केन च अनृतम् उक्तम् ? सुरेशेन सत्यम् उक्तम् परं धीवरेण असत्यं भाषितम् । त्वया किम् आनीतम् ? तेन च किम् आनीतम् ? त्वया फलम् आनीतम् । तेन दुग्धम् आनीतम् । मया किम् अपि न आनीतम् ।

मया भोजनं भक्षितम् । त्वया जलं पीतम् ।

## शब्दार्थः

(मया) हसितम्=(मेरे द्वारा) हंसा गया। तेन=उसके द्वारा। छात्रेण=छात्र के द्वारा। कृतम्=किया गया। दत्तम्=दिया गया। हृतम्=चुराया गया। केन=किसके द्वारा? धीवरेण=मछेरे के दवारा। भाषितम्=कहा गया। आनीतम्=लाया गया। भक्षितम्=खाया गया। पीतम्=पिया गया।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) सुरेशेन किम् उक्तम्? (ख) छात्रेण किं कृतम्?
(ग) साधुसिंहेन किं दत्तम्? (घ) त्वया किम् आनीतम्?
(ङ) केन भोजनं भक्षितम्?

२. खाली स्थानों को भर दीजिए :—

(क) मया असत्यं न··· । (ख) त्वया भोजनं··· ।
(ग) धीवरेण···भाषितम् (घ) केन अनृतं··· ।
(ङ) शरीरेण···दत्तम् । (च) ···भूषणं दत्तम् ।

३. संस्कृत में अनुवाद कीजिए :—

(क) किसके द्वारा भोजन दिया गया? (ख) छात्र के द्वारा क्या किया गया?
(ग) तेरे द्वारा भोजन लाया गया। (घ) चोर के द्वारा क्या चुराया गया?
(ङ) उसके द्वारा दूध लाया गया। (च) मेरे द्वारा पानी पिया गया।

# चतुर्दशः पाठः

केन दण्डेन चलति ? वृद्धः दण्डेन चलति । निर्बलः च दण्डेन चलति । का करेण कन्दुकं क्रीडति ? हमीदा करेण कन्दुकं क्रीडति, सईदा अपि करेण कन्दुकं क्रीडति, परं बशीरः पादेन कन्दुकं क्रीडति ।

काः घटैः पादपान् असिञ्चन् ? कुमार्यः घटैः पादपान् असिञ्चन् । मालाकाराः अपि घटैः पादपान् असिञ्चन् ।

मया पत्रं लिखितम् । अस्माभिः पत्रं न लिखितम् । परं कन्याभिः पत्रं लिखितम् । कविना कविता पठिता । छात्रैः कविता न पठिता । अध्यापिकाभिः च कविता न पठिता ।

युष्माभिः पाठः स्मृतः । अस्माभिः अपि पाठः स्मृतः । तैः अपि पाठः स्मृतः, किन्तु ताभिः पाठः न स्मृतः ।

### शब्दार्थः

दण्डेन=डण्डे से। करेण=हाथ से। घटैः=घड़ों से। पादपान्=पौधों को। अस्माभिः=हमारे द्‌वारा। युष्माभिः=तुम्हारे द्‌वारा। ताभिः=उन (स्त्रियों) के द्‌वारा।

### अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) कन्या···कन्दुकं क्रीडति।

(ख) अस्माभिः पाठः···। (ग) मया पत्रं···।

(घ) ···पाठः स्मृतः। (ङ) त्वया पुस्तकम्···।

(च) कविना कविताः···।

२. संस्कृत में उत्तर दीजिए :—

(क) कः दण्डेन चलति ? (ख) केन कविता पाठिता ?

(ग) कः पादेन कन्दुकं क्रीडति ?

(घ) कैः कविता न पठिता ?

(ङ) काः घटैः पादपान् असिञ्चन् ?

(च) काभिः पाठः न स्मृतः ?

३. संस्कृत में अनुवाद कीजिए :—

(क) बूढ़ा डण्डे से चलता है।

(ख) मैं पाँव से खेलता हूँ।

(ग) हमीदा हाथ से खेलती है।

(घ) हमारे द्‌वारा पाठ याद किया गया।

(ङ) तेरे द्‌वारा कविता पढ़ी गई।

(च) मेरे द्‌वारा पत्र लिखा गया।

# पञ्चदशः पाठः

त्वम् अत्र तिष्ठ, अहं भोजनं कृत्वा अधुना एव आगच्छामि । गच्छ त्वं क्रीडाक्षेत्रम्, अहं तु सदा दुग्धं पीत्वा एव तत्र गच्छामि । यूयम् आगच्छथ, वयं भोजनं खादित्वा युष्माभिः सह चलामः ।

भोजनं भुक्त्वा जलं पिब । पादैः चलित्वा ग्रामं गच्छत । वयं भारं धृत्वा न धावामः । शिष्यः गुरुं पृष्ट्वा पाठं पठति । छात्राः अध्यापकं नत्वा गृहं गच्छन्ति । वधिकः अजं हत्वा आनयति ।

त्वया तत् कार्यं कथं न कृतम् ?

युष्माभिः तत्र किं दृष्टम् ? अस्माभिः तत्र किम् अपि न दृष्टम् ? किं युष्माभिः श्रुतं यत् परीक्षक आगच्छति ? न हि, अस्माभिः तु न श्रुतम् ।

## शब्दार्थः

कृत्वा = करके। पीत्वा = पीकर। खादित्वा = खाकर। भुक्त्वा = खाकर। चलित्वा = चलकर। धृत्वा = धरकर। पृष्ट्वा = पूछकर। नत्वा = नमस्कार करके। बधिकः = कसाई। अजम् = बकरे को। हत्वा = मारकर। हसित्वा = हँसकर। धावित्वा = दौड़कर। दृष्टवा = देखकर। पृष्टम् = पूछा गया। श्रुतम् = सुना गया।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) अहं भोजनं···आगच्छामि।

(ख) भोजनं···जलं पिब।

(ग) पुस्तकं···आगच्छ।

(घ) किं···श्रुतम् ?

(ङ) न हि, अस्माभिः न······।

(च) जनैः तत्र किं···?

२. संस्कृत में अनुवाद कीजिए :—

(क) काम करके शीघ्र आ।

(ख) घर जाकर वस्त्र ला।

(ग) मैं भोजन खाकर आता हूँ।

(घ) गुरु को पूछकर पाठ पढ़।

(ङ) मार्ग देख कर चलो।

(च) तू दौड़कर जा।

चतुर्थी -
बालकः → बालकाय बालकाभ्यां बालकेभ्यः
मुनिः → मुनये मुनिभ्यां मुनिभ्यः

## षोडशः पाठः

बालिका → बालिकायै

कः निर्धनाय भोजनं यच्छति ? दयालुः निर्धनाय भोजनं यच्छति । गृहस्थः केभ्यः दानं ददाति ? गृहस्थः दीनेभ्यः दानं ददाति । तक्षकः स्तम्भाय किं आनयति ? तक्षकः स्तम्भाय काष्ठम् आनयति ।

कान्ता रुग्णाय किम् अयच्छत् ? सा रुग्णाय दुग्धम् अयच्छत् । हमीदा सहोदराय किम् आनयत् ? हमीदा सहोदराय क्रीडनकम् आनयत् ।

माता शिशवे न कुप्यति, सा शिशवे स्निह्यति । गुरुः अपि बटुभ्यः न क्रुध्यति, सः बटुभ्यः स्निह्यति । वहीदा मह्यं दुग्धम् आनयति । सकीना तुभ्यं फलानि आनयति । प्रभुः किंकरेभ्यः वेतनं ददाति । ते वेतनं गृहीत्वा गृहं गच्छन्ति । तत्र ते वेतनेन परिवारेभ्यः भोजनं वस्त्रं च आनयन्ति ।

मतिः - मतये मतिभ्यां मतिभ्यः

## शब्दार्थः

निर्धनाय=गरीब को। तक्षक:=बढ़ई। स्तम्भाय=खम्भे के लिए। रुग्णाय=बीमार को। सहोदराय=सगे भाई के लिए। वटुभ्य:=छोटे विद्यार्थियों को। तुभ्यं=तेरे लिए। मह्यम्=मेरे लिए किंकरेभ्या:=नौकरों को। परिवारेभ्य:=परिवार के लोगों के लिए।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) तक्षकः……काष्ठम् आनयति।
(ख) प्रभुः…वेतनं ददाति।
(ग) कान्ता…दुग्धम् अयच्छत्।
(घ) सा…स्निह्यति।

२. बहुवचन में लिखिए :—

(क) बालः याचकाय पणं अयच्छत्।
(ख) हमीदा सहोदराय क्रीडनकम् आनयति।
(ग) वैद्यः रुग्णाय औषधम् अददात्।
(घ) तक्षकः स्तम्भाय काष्ठम् आनयत्।
(ङ) धनाढ्यः दीनाय भोजनं ददाति।
(च) सकीना तुभ्यं दुग्धम् आनयति।

३. एकवचन में लिखिए :—

(क) तक्षकाः स्तम्भेभ्यः काष्ठानि आनयन्ति।
(ख) धनाढ्याः दीनेभ्यः वस्त्राणि यच्छन्ति।
(ग) गुरवः छात्रेभ्यः स्निह्यन्ति।
(घ) किंकराः परिवारेभ्यः भोजनानि वस्त्राणि च आनयन्ति।

# सप्तदशः पाठः

त्वं केभ्यः पुस्तकानि आनयसि ? अहं छात्रेभ्यः पुस्तकानि आनयामि । अहं अपि तेभ्यः सदा पुस्तकानि यच्छामि । त्वं येभ्यः भोजनं वस्त्रं च यच्छसि, ते एव तुभ्यं द्रुह्यन्ति । यूयं अस्मभ्यं कलमम् आनयत वयं युष्मभ्यं पुस्तकानि आनयामः ।

मालाकाराः मालाभ्यः पुष्पाणि आहरन्ति रोहिणी स्वभगिनीभ्यः फलानि ददाति । कुमार्यः पादपेभ्यः लताभ्यः च जलं आनयन्ति ।

शत्रवः शत्रुभ्यः द्रुह्यन्ति । गुरुः शिष्येभ्यः क्रुध्यति । अध्यापिका सदा सर्वाभ्यः छात्राभ्यः दण्डं न ददाति । सा काभ्यः छात्राभ्यः क्रुध्यति, काभ्यः च स्निह्यति ?

## शब्दार्थः

केभ्यः (छात्रेभ्यः)=किन (छात्रों) के लिए। तेभ्यः=उनके लिए। येभ्यः=जिनके लिए। काभ्यः (छात्राभ्यः)=किन (छात्राओं) के लिए। द्रुह्यन्ति=दुश्मनी करते हैं। पादपेभ्यः=पौधों के लिए। लताभ्यः=बेलों के लिए। छात्राभ्यः=विद्यार्थिनियों के लिए।

## अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) अहं केभ्यः सदा पुस्तकानि यच्छामि ?

(ख) यूयम् अस्मभ्यं किम् आनयत ?

(ग) मालाकाराः काभ्यः पुष्पाणि आहरन्ति ?

(घ) कुमार्यः पादपेभ्यः लताभ्यः च किम् आनयन्ति ?

२. संस्कृत में अनुवाद कीजिए :—

(क) वह मुझे एक किताब देता है।

(ख) तुम यह दूध किनके लिए ले जाते हो ?

(ग) माली मालाओं के लिए फूल ला रहे है।

(घ) छोटी लड़कियां पौधों के लिए जल ला रही हैं।

(ङ) तुम जिनको भोजन देते हो वे ही तुमसे द्रोह करते हैं।

सः → तस्मै , कः → कस्मै
त्वं → तुभ्यं , का → कस्यै
अहं → मह्यम् , या → यस्यै
सा → तस्यै

# अष्टादशः पाठः

फलं पतति । फलं कस्मात् पतति ? फलं वृक्षात् पतति । नदी कस्मात् आगच्छति ? नदी पर्वतात् आगच्छति । मनोहरः कस्मात् आगच्छति ? सः ग्रामात् आगच्छति । मनोहरः ग्रामात् किम् आनयति ? सः ग्रामात् फलानि पुष्पाणि च आनयति ।

शान्ता कस्याः प्रश्नं पृच्छति ? सा अध्यापिकायाः प्रश्नं पृच्छति । सा तस्याः पाठम् अपि पठति । वयं गृहात् नदीम् गच्छामः । यूयम् नद्याः जलम् आहरथ ।

त्वं कस्मात् नगरात् अत्र आगच्छः ? अहं जम्बु-नगरात् अधुना एव आगच्छामि । किरणाः कस्मात् आगच्छन्ति ? किरणाः भानोः आगच्छन्ति । ते आकाशात् अधः पतन्ति ।

कस्मात (कस्याः) किससे (कः)
यस्मात (यस्याः) जिससे (यः)
अस्मात (अस्याः) - इससे (इदम्)
तस्मात (तस्याः) - उससे (सः)
एतस्मात - इससे (एतत)
अहं - मत (मुझसे) -
त्वत - तुमसे

### शब्दार्थः

कस्मात्=किससे ? वृक्षात्=पेड़ से। कस्याः=किस (नारी) से ? अध्यापिकायाः=उस्तानी से। तस्याः=उस नारी से। नद्या=नदी से। भानोः=सूर्य से। अधः=नीचे।

### अभ्यासः

१. खाली स्थानों को भर दीजिए :–

(क) फलं......पतति।

(ख) सः......आगच्छति।

(ग) अश्वः......ग्रामं धावति।

(घ) सा......प्रश्नं पृच्छति।

(ङ) वयं......नदीम् गच्छामः।

(च) किरणाः......अधः पतन्ति।

२. संस्कृत में उत्तर दीजिए :–

(क) फलं कस्मात् पतति ?

(ख) शान्ता कस्याः प्रश्नं पृच्छति ?

(ग) वयं नद्याः किम् आनयामः ?

(घ) किरणाः कस्मात् आगच्छन्ति ?

३. संस्कृत में अनुवाद कीजिए :–

(क) छात्र घर से विद्यालय को जा रहे हैं।

(ख) वे गुरु से पाठ पढ़ रहे हैं।

(ग) हम नदी से जल लाते हैं।

(घ) शान्ता अध्यापिका से प्रश्न पूछ रही है।

## एकोनविंशः पाठः

बशीरः ग्रामात् आगच्छत्। सः अधुना एव विद्यालयं गमिष्यति। तत्र सः मोहनं मिलिष्यति। तस्मात् पुस्तकं च गृहीत्वा पुनः अत्र आगमिष्यति।

कः कः पाठं पठिष्यति? वयं सर्वे पाठं पठिष्यामः। त्वम् अपि पाठं पठिष्यसि। सः अपि पाठं पठिष्यति। अहम् अपि पाठं पठिष्यामि।

कः पुस्तकानि आनेष्यति? त्वं आनेष्यसि? यूयं वा आनेष्यथ? वयं पुस्तकानि आनेष्यामः।

मोहन! त्वम् अद्य किं कार्यं करिष्यसि? अहम् अद्य किम् अपि कार्यं न करिष्यामि। न पठिष्यामि, न लिखिष्यामि, न च स्मरिष्यामि। अहम् अद्य केवलं चित्रपटं द्रक्ष्यामि। वरम्, अद्य वयम् अपि त्वया सह चित्रपटं द्रक्ष्यामः। अन्ये अपि द्रक्ष्यन्ति।

## शब्दार्थः

गमिष्यति=जाएगा। मिलिष्यति=मिलेगा। पठिष्यति=पढ़ेगा। पठिष्यामः=(हम) पढ़ेंगे। पठिष्यसि=(तू) पढ़ेगा। नेष्यति=ले जाएगा। नेष्यसि=(तू) ले जाएगा। करिष्यसि=(तू) करेगा। चित्रपट=सिनेमा। द्रक्ष्यामि=देखूंगा।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) सः अधुना एव विद्यालयं...... ।

(ख) वयं सर्वं पाठं...... ।

(ग) यूयम् अद्य चित्रपटं...... ।

(घ) अन्ये बालकाः अपि चित्रपटं...... ।

२ बहुवचन में लिखिए :—

(क) सः विद्यालयं गमिष्यति।

(ख) त्वं भोजनं खादिष्यसि।

(ग) अहं चित्रपटं द्रक्ष्यामि।

(घ) सः पाठं पठिष्यति।

(ङ) अहम् अत्र एव स्थास्यामि।

३. एकवचन में लिखिए :—

(क) ते कुत्र गमिष्यन्ति ?

(ख) वयं पाठं न पठिष्यामः।

(ग) ते अत्र एव स्थास्यन्ति।

(घ) यूयं कुत्र क्रीडिष्यथ ?

(ङ) यूयं किमर्थं धाविष्यथ ?

# विंशः पाठः

त्वं कुत्र गमिष्यसि ? अहं ग्रामं गमिष्यामि । त्वं किमर्थं ग्रामं गमिष्यसि ? अहं काष्ठानि ग्रामात् आनेष्यामि । कस्य आदेशेन त्वं एतत् कार्यं करोषि ? अहं जनकस्य आदेशेन एतत् कार्यं करोमि । किं तव सहोदरः अपि कार्यं करोति । न हि, सः न करोति । परं अन्ये बान्धवः कुर्वन्ति ।

त्वं कस्य आज्ञया उद्यानम् आगच्छः ? अहम् अग्रजस्य आज्ञया तत्र अगच्छम् । अध्यापकस्य कथनात् अपि अहं तत्र अगच्छम् । तत्र गत्वा अहं लतायाः पुष्पाणि आहरम् । अधुना अस्य वृक्षस्य काष्ठानि गृहं नेष्यामि । भानोः किरणैः सर्वत्र प्रकाशः भवति । इन्दोः किरणैः अपि प्रकाशः भवति ।

## शब्दार्थः

कस्य = किसकी ? अध्यापकस्य = उस्ताद की । अग्रजः = बड़ा भाई । लतायाः = बेल के । भानोः = सूर्य की ।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) अहं ..... काष्ठानि ग्रामात् आनेष्यामि ।

(ख) अहं ..... आदेशेन एतत् कार्यं करोमि ।

(ग) अहं ..... आज्ञया तत्र अगच्छम् ।

२. भविष्यत् काल (लृट्) लकार में लिखिए :—

(क) अहं गच्छामि ।

(ख) त्वं करोषि ।

(ग) सः आगच्छति ।

(घ) बालाः पाठं पठन्ति ।

(ङ) वयं पत्र लिखामः ।

(च) वयं युष्मान् वदामः ।

३. वर्तमान काल में लिखिए :—

(क) अहं ग्रामं न गमिष्यामि ।

(ख) सः पत्रं न लिखिष्यति ।

(ग) वयम् अत्र क्रीडिष्यामः ।

(घ) बालाः कार्यं न करिष्यन्ति ।

(ङ) ते पाठं पठिष्यन्ति ।

(च) अहम् अपशब्दं न वदिष्यामि ।

# एकविंशः पाठः

(लोट लकार)

गृहे तिष्ठ। क्षेत्रे मा तिष्ठ। जले पश्य। सूर्यं मा पश्य। कविः कुत्र कवितायाः पाठं करोति ? कविः सभायां कवितां पठति। भानौ किम् अस्ति ? भानौ अग्निः अस्ति। गिरौ के निवसन्ति ? गिरौ जनाः निवसन्ति। गिरौ ग्रामाः च सन्ति।

त्वयि गुणाः सन्ति। अहमदे अपि गुणाः सन्ति, परं तस्य मित्रे गुणाः न सन्ति। अस्मासु देवराजः, युष्मासु बशीरः, तेषु च साधुसिंहः शीघ्रं धावति। वहीदा सर्वासु बालिकासु सुशीला अस्ति।

नद्याः जले लोकः स्नानं करिष्यन्ति। वयं गृहे एव स्थास्यामः। अस्माकं जनकः एव उत्सवे गमिष्यति। रजन्यां तारकाः प्रकाशं करिष्यन्ति। दिने सूर्यः प्रकाशं करिष्यति।

खगाः तरुषु कूजिष्यन्ति।

## शब्दार्थः

गृहे=घर पर । क्षेत्रे=खेत में । आज्ञायां=आज्ञा में । सभायां =सभा में । भानौ=सूर्य में । गिरौ=पर्वत पर । त्वयि=तुझ में । मयि=मुझ में । अस्मासु=हम में । युष्मासु=तुम में । तेषु=उन में । स्थास्यामः=(हम) ठहरेंगे । रजन्यां=रात में । तरुषु=पेड़ों पर ,

## अभ्यासः

१. संस्कृत में उत्तर दीजिए :—

(क) गिरौ के निवसन्ति ?

(ख) नद्याः जले लोकाः किं करिष्यन्ति ?

(ग) रजन्यां तारकाः किं करिष्यन्ति ?

(घ) दिने सूर्यः किं करिष्यति ?

२. संस्कृत में अनुवाद कीजिए ?

(क) रात को तारे प्रकाश करेंगे ।

(ख) दिन को सूर्य की किरणें प्रकाश करेंगी ।

(ग) पिताजी जलसे में जाएँगे ।

(घ) मैं घर पर ठहरूँगा ।

(ङ) पंछी पेड़ों पर चहचहाएँगे ।

## द्वात्रिंशः पाठः

मोहन, आगच्छ । वयं क्रीडामः हे मूर्ख, अत्र मा उपविश । अत्र नार्यः उपविशन्ति । रे पापाः, पापं मा कुरुत । हे कवे, स्वकवितायाः पाठं कुरु । शारदे, कथां कथय । सख्यः, माम् अत्र मा त्यजत । माम् अपि तत्र नयत यत्र यूयं गच्छत । हे साधो, मम गृहम् आगच्छ, अहं तव सेवां करिष्यामि ।

भोः श्रमिकाः, परिश्रमं कृत्वा देशम् उन्नतं कुरुत । भो कृषकाः, अधिकम् अन्नम् उत्पादयत । भो, बन्धवः, मयि विश्वासं कुरुत, अहं युष्मभ्यं सुखं दास्यामि ।

हे सखि, मम सहायतां कुरु । हे महमूदे, त्वं किं करोषि ? अत्र मा उपविश । हे रजनि, स्वपुस्तकं मम सकाशम् आनय । अहं तत् तव पुस्तकं द्रक्ष्यामि ।

## शब्दार्थः

उपविश = बैठ। उत्पादयत = पैदा करो। सकाशं = पास। द्रक्ष्यामि = देखूँगा, देखूँगी।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) हे.........अत्र आगच्छ।
(ख) हे.........मयि विश्वासं कुरुत।
(ग) हे.........अत्र मा उपविश।
(घ) रे.........बहिः मा गच्छ।
(ङ) अयि.........त्वं किं करोषि ?
(च) भो.........मम गृहम् आगच्छ।

२. बहुवचन में लिखिए :—

(क) सखि, माम् अत्र मा त्यज।
(ख) रे मूर्ख, अत्र मा उपविश।
(ग) रे पाप, पापं मा कुरु।
(घ) रे नीच, असत्यं मा वद।
(ङ) हे साधो, मम गृहम् आगच्छ।
(च) बाले, त्वं किं करोषि ?

३. एकवचन में लिखिए :—

(क) कवयः, अत्र आगच्छत।
(ख) साधवः, वचनानि वदत।
(ग) सख्यः, मां मा त्यजत।
(घ) बालाः, पाठं पठत।
(ङ) रे पापाः, पापं किं कुरुत ?

# त्रयोविंशः पाठः

(एकः) करः स्पृशति । (द्वौ) करौ स्पृशतः ।
(एकः) बालः पठति । (द्वौ) बालौ पठतः ।
सः छात्रः लिखति । तौ छात्रौ लिखतः ।
(एकं) नेत्रं पश्यति । (द्वे) नेत्रे पश्यतः ।
(एकं) मित्रं आगच्छति । (द्वे) मित्रे आगच्छतः ।
तत् कमलं रोहति । ते कमले रोहतः ।
(एका) जंघा न धावति । (द्वे) जंघे धावतः ।
(एका) कन्या गायति । (द्वे) कन्ये गायतः ।
सा बाला नृत्यति । ते बाले नृत्यतः ।

बाले कुत्र गच्छतः ? बाले पाठशाला गच्छतः । तत्र ते किं करिष्यतः ? तत्र ते पाठ पठिष्यतः । सख्यौ किं कथयतः ? सख्यौ किम् अपि न कथयतः । ते पाठं पठतः । ते चित्रे पश्यतः । कपी किं खादतः ? कपी फले खादतः । साधू किं पठतः ? साधू स्तोत्रं पठतः ।

शब्दार्थः

रोहति=(एक) उगता है। रोहतः=(दो) उगते हैं। करिष्यत=(दो) करेंगी। सख्यौ=दो सहेलियां। नार्यौ=दो नारियां कपी=दो वानर। साधू=दो साधु।

अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) ......किं पश्यतः ?

(ख) ......पाठं पठतः।

(ग) ......चित्र पश्यतः।

(घ) ......कुत्र गच्छतः ?

(ङ) ......खादतः।

(च) ......कदा गमिष्यथः।

२. द्विवचन में लिखिए :—

(क) नेत्रं पश्यति।

(ख) नारी पचति।

(ग) फलं पतति।

(घ) सखी वदति।

(ङ) कविः गायति।

(च) साधु सत्यं वदति।

(छ) बाला किं वदति ?

३. एकवचन में लिखिए :—

(क) बालौ किं पश्यतः ?

(ख) साधू अत्र तिष्ठतः।

(ग) सख्यौ सत्यं वदतः।

(घ) कवी अत्र पठतः।

# चतुस्त्रिंशः पाठः

## वार्तालापः

मनोरमा—महमूदे, हमीदा कुत्र अगच्छत् ?

महमुदा—मनोरमे, हमीदा उपवनम् अगच्छत् ।

मनो०—तस्याः सहोदरौ कुत्र अगच्छताम् ?

मह०—तौ अपि हमीदया सह उपवनम् अगच्छताम् ।

मनो०—तौ उपवने किं करिष्यतः ?

मह०—तौ तत्र दण्डाभ्यां कन्दुकं क्रीडिष्यतः ।

मनो०—महमूदे, परं हमीदा तत्र किं करिष्यति ?

मह०—उपवनस्य सरोवरे द्वौ हंसौ तरतः । मिथः च क्रीडतः । हमीदा तत्र तौ द्रक्ष्यति । सहोदरयोः पुस्तकानि च रक्षिष्यति ।

मनो०—ह्यः त्वं कुत्र अगच्छः ?

मह०—ह्यः अहं, मम भगिनी च जनकस्य सकाशम् अगच्छाव । जनकः आवाम् अवदत्—युवां महमूदस्य विद्यालयं गच्छतम् । तत्र महमूद-बशीरौ वदतम्, यत् तौ गृहम् गत्वा पुस्तके आनयताम् ।

## शब्दार्थः

सहोदरौ=दो सगे भाई। दण्डाभ्यां=दो डण्डों से। मिथ:=आपस में। द्रक्ष्यति=देखेंगी। सहोदरयोः=दो सगे भाइयों की। वदतम्=(तुम दो) कहो। आनयताम्=(वे दो) लाएँ।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) सहोदरौ कुत्र······?

(ख) तौ उपवने किं······?

(ग) चरणौ······।

(घ) नयने······।

(ङ) आवां कुत्र······?

२. संस्कृत में उत्तर दीजिए :—

(क) हमीदा कुत्र अगच्छत् ?

(ख) तस्याः सहोदरौ च कुत्र अगच्छताम् !

(ग) सहोदरौ उपवने किं करिष्यतः ?

(घ) महमूदबशीरौ कुत्र अभवताम् ?

३. संस्कृत में अनुवाद कीजिए :—

(क) दो छात्र विद्यालय को जाते हैं।

(ख) वे दोनों वहाँ अध्यापक से पाठ पढ़ते हैं।

(ग) तुम (दो) डण्डों से गेंद खेलो।

(घ) तुम (दो) उपवन के सरोवर में दो हंसों को देखो।

(ङ) हम दो अब भोजन खाएँगे।

(च) हम दो कहाँ जाएँ, क्या पढ़ें और क्या न पढ़ें ?

# पञ्चविंशः पाठः

## सुभाषितानि

विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनम् आप्नोति धनाद्धर्मं ततः सुखम् ॥१॥

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ?
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥२॥

पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समापन्ने न सा विद्या न तद् धनम् ॥३॥

माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥४॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥५॥

अयं निजः परो वेत्ति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥६॥

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥७॥

## शब्दार्थः

विनयम्=नम्रता (को)। पात्रताम्=अधिकारिभाव (को)। आप्नोति=प्राप्त करता है। प्रज्ञा=बुद्धि। लोचनाभ्यां=दो आंखों से। विहीनस्य=रहित (मनुष्य का)। दर्पणः=शीशा। पुस्तकस्था=किताब में लिखी। परहस्त गतं=पराए हाथ में गया हुआ। कार्यकाले=काम के समय (पर)। आपन्ने=आ पड़ने पर। पाठितः=पढ़ाया गया। शोभते=सुहाता है। सभामध्ये=सभा के बीच। वकः=बगुला। शैले=पर्वत पर। माणिक्यं=हीरा। गजे=हाथी में। मौक्तिकं=मोती। निजः- अपना। गणना=गिनती। विचार=भावना। लघुचेतसाम्=छोटे दिल वालों की। उदार चरितानां=विशाल हृदय लोगों की। वसुधा=पृथ्वी। कुटुम्बकम्=परिवार। सुखिनः=सुखी। निरामयः=रोगरहित। भद्राणि=मङ्गल। दुःखभाक्=दुःख का भागी, दुःख उठाने वाला। भवेत्=हो।

## अभ्यासः

१. खाली स्थानों को भर दीजिए :—

(क) विद्या ...... ददाति।

(ख) पात्रत्वात् ...... आप्नोति।

(ग) शैले ...... माणिक्यम् न।

(घ) लोचनाभ्यां विहीनस्य ...... किं करिष्यति ?

२. संस्कृत में उत्तर दीजिए :—

(क) विद्या किं ददाति ?

(ख) पात्रत्वात् किम् आप्नोति ?

(ग) कः सभामध्ये न शोभते ?

(घ) शैले-शैले किं न भवति ?

(ङ) सर्वत्र के न भवन्ति ?

(च) सर्वे कीदृशाः भवन्तु ?

